**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥**

भग. गी. अ. ६

श्वेताश्वतरकैवल्याद्युपनिषत्सु ब्रह्मविद्याकामानामासनपूर्वकत्वेन तदुपासनाविध्युपदेशादारूढानां आसननियमाभावेप्यारुरुक्षूणामासनमुद्रालक्ष्याभ्यासनियमो न विरुध्यते ।

**साधनं विना साध्यानिष्पत्तेरिति न्यायात्** स्थितिगत्योः प्रयत्नसापेक्षाच्छयाने च निद्रासंभवादासीनस्यैव चित्तैकाग्रता भवति ॥ तस्मादासीनस्सन् ब्रह्मोपासनमनुतिष्ठेत । इति शास्त्रनियमानुगमात् । आसनपूर्वकत्वेन दहरादिब्रह्मोपासनं मुमुक्षूणां कर्तव्यमिति सिद्धं, इति ।

श्रीकरभाष्यम् पृ. ४४३

**समग्रीवशिरःशरीरः**-अचलितकण्ठमस्तकाद्यङ्गस्सन्नित्यर्थः । **समं कायशिरोग्रीवं धारयन्नचलं स्थिरः** । इति भगवद्गीतोक्तेः ।

भग. गी. अ. ६

**अत्याश्रमस्थः**-अत्याश्रमे तिष्ठतीत्यत्याश्रमस्थः, आश्रमपदेन वर्णोऽप्यत्रोपलक्ष्यते । ततः प्राकृतवर्णाश्रमधर्मानतीत्य स्वात्मरूपाप्राकृतवर्णाश्रमधर्मेषु तिष्ठतीत्यतिवर्णाश्रमस्थो भक्ताद्यैक्यान्तषडाश्रमाष्टावरणादिधर्मवान्वीरशैवभक्तमाहेश्वरादिरित्यर्थो लभ्यः ।

**यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।**
**स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ॥**

योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तस्सर्ववेदार्थवादिभिः ॥

नारदपरिव्राजकश्रुतिः उ. ६

यो वर्णानाश्रमान् सर्वान् अतीत्य स्वात्मनि स्थितः ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवादिभिः ॥

वी. सदा. म. पृ. २७

हृदब्जमध्ये लिङ्गं धृत्वा ज्योतिषि संविशन्ति ।
अत्याश्रमस्थाः परिमुच्यन्ति सर्वे लिङ्गाङ्गशोभा मोक्षमार्गैकनिष्ठाः

वीरशैवोत्कर्ष. सं. पृ. ७

अष्टावरणसंपन्नः पञ्चाचारपरायणः ।
वैदिकं कर्म कुर्वीत ज्ञानैकफलसाधनम् ॥
उद्धूलनं त्रिपुण्ड्रश्च ज्ञानाङ्गत्वेन सादरम् ।
आमनन्ति मुनिश्रेष्ठाः श्वेताश्वतरशाखिनः ॥
अयमत्याश्रमो धर्मो यैस्समाचरितो मुदा ।
तेषामेव शिवज्ञानं संसारच्छेदकारणम् ॥

इति क्रियासारे

षड्विधाश्रमिणामेषां पृथगाचारलक्षणम् ।
ऐक्यस्थलादिभक्तान्तस्थलसंभूतिरीरिता ।
ऐक्यादिभक्तपर्यन्ताश्रमिणां षट्स्थलात्मनाम् ॥

अ. ४

इत्यनुभवसूत्रे ।

अत्याश्रमसमाख्यं यद्व्रतं पाशुपतव्रतम् ।
वेदान्तेषु समस्तेषु तत्सारतरमुत्तमम् ॥

क्रियासार उ. ८

विचिन्तयेत् स्वात्मनि शम्भुमीशं शिवं परं शान्तमुमासहायम् ।
भस्माङ्गमाविष्कृतदीप्तदेहमत्याश्रमोऽयं चतुर्ष्वाश्रमेषु ॥
यः पशुः स पशुत्वं च व्रतेनानेन संत्यजेत् ।
विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः ।
संस्थाप्य मयि चात्मानं निर्मले परमेश्वरे ।
प्लावयित्वात्मनो देहं तेनैव ज्ञानवारिणा ॥

वीर. आनं. पृ. ४५२, कूर्म. पु. भा. १, अ. १३

लिङ्गाङ्गसङ्गिनां चैव पुनर्जन्म न विद्यते ।
एषः पाशुपतो योगः पशुपाशविमुक्तये ।
सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः ॥
परब्रह्माभिधं लिङ्गं पशुपाशविमोचकम् ।
यो धारयति सद्भक्त्या स पाशुपत उच्यते ॥
शरीरत्रितये भक्त्या लिङ्गं परशिवात्मकम् ।
यो धृत्वा विचरेद्भूमौ स पाशुपत उच्यते ॥
लिङ्गं शिवो भवेत् क्षेत्रमङ्गं संयोग आश्रयः ॥
तस्माल्लिङ्गाङ्गसंयुक्तो योऽपि सोऽत्याश्रमी भवेत् ॥

श्रीकर भा. पृ. ९

इति क्रियासाराद्युक्तेः ।

**सकलेन्द्रियाणि**-सकलानि च तानीन्द्रियाणि च सकलेन्द्रियाणि, मनोमुख्यैकादशानीन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणीत्यर्थः, **निरुध्य**-संयम्य, मनोमुख्येन्द्रियाणामैकाग्रयरूपतपस्वी सन्नित्यर्थः ।

**मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।**

इत्यभिज्ञोक्तेः ।

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥**
**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**

भग. गी. अ. ६

इति गीतोक्तेश्च ।

**स्वगुरुं**-स्वानुभवोपदेशकर्तारं, स्वकीयं सद्गुरुमित्यर्थः । **भक्त्या**-तत्तत्कालदेशवस्त्वनुसृत्यातिममता यथैव स्वात्मनि वर्तते तथैव गुरुदेवतादिषु तदधिकोनुरागो भक्तिस्तया, गुरुः साक्षाच्छिव एवेति सद्भावरूपानुरागेणेत्यर्थः । **प्रणम्य**-पादादिमस्तकपर्यन्तं तत्स्वरूपं हृदि सम्यग्विचिन्तयन्नभिवन्द्येत्यर्थः, तथा चोक्तं शिवागमादिषु ।

**गुरुर्देवो महादेवो गुरुर्देवस्सदाशिवः ।**
**गुरुर्देवात्परं नास्ति तस्मै श्रीगुरवे नमः ॥**
**अवाच्यात्मस्वरूपाय शिवभावप्रदायिने ।**
**नमस्सद्गुरुनाथाय षट्स्थलब्रह्ममूर्तये ॥**

अनु. सू. अ. १

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम् ।
नादबिन्दुकलातीतं तस्मै श्रीगुरवे नमः ॥
विविक्तं देशमाश्रित्य सुखासीनो महाशुचिः ।
समग्रीवशिरःकायः सितभस्मावगुण्ठितः ॥
इन्द्रियाणि समस्तानि निरुध्य सुरपुङ्गवाः ।
प्रणम्य स्वगुरुं भक्त्या ....... ॥ इति

ब्रह्म. गी. अ. ८

**विरजं**-विगतं रजो यस्मात्तद्विरजं दुर्विषयवासनाजनित कालुष्यरहितम् । निर्मलमत एव **विशुद्धं**-परिशुद्धं परिपूतमित्यर्थः । **हृत्पुण्डरीकं**-हृदयपद्मं शिवधर्मकन्दादिलक्षणलक्षितं हृत्कमलमित्यर्थः । श्रीचन्नसदाशिवयोगीन्द्रचरणैस्तदुक्तम्

हृत्पद्मं शिवधर्मकन्दसहितं सुज्ञाननाळं तथा
नित्यैश्वर्यदलाष्टकं शशिनिभं वैराग्यसत्कर्णिकम् ।
श्रीरुद्रेश्वरकेसरान्वितमिदं संचिन्त्य तन्मध्यमे
सूर्येन्दूज्वलवह्निमण्डलगतं ध्यायेच्छिवं चिन्मयम् ॥ इति

शिवयोगप्रदीपिका पटल १

दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहरं गगनं विशोकः तस्मिन्यदन्तस्तदुपासितव्यम् ॥

म. नारायण.

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिः ॥

ब्र. गी. अ. ७

हृदयं निर्मलं कृत्वा चिन्तयित्वाप्यनामयम् ।
अहमेव परं सर्वमिति पश्येत्परं सुखम् ॥

पैङ्गलोपनिषत् अ. ४

शुचौ देशे समासीनो यथावत्कल्पितासनः ।
जितेन्द्रियो जितक्रोधः चिन्तयेत् शिवमव्ययम् ॥
हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम् ।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम् ॥
ध्यानावधूताखिलकर्मबन्धश्चिरं चिदानन्दनिमग्नचेताः ।

श्रीकर भा. पृ. ४६३

इति श्रुतिस्मृत्याद्युक्तेश्च । **विचिन्त्य**-निर्मलमनसा सम्यक् स्मृत्वा, **मध्ये**-तद्हृदम्बुजमध्ये, **विशदं**-धवलं निर्मलमित्यर्थः । अत एव **विशोकं** शोकहेतुभूतमायाराहित्याद्दुःखरहितं नित्यानन्दरूपत्वाच्छोकरहितं चेत्यर्थः ।

**ब्रह्मविद् ब्रह्मैव भवति । ब्रह्मकामो ब्रह्मवेदनं कुर्यात् । मजमात्मानं त मत्वा धीरो न शोचति ।**

श्रीकर भा. पृ. १९-५२

"**तरति शोकमात्मवित्**" इत्यादिश्रुतेः ।

सुबालोपनिषत् खं. ३

**अव्यक्तं** - शब्दस्पर्शरूपरसादीनामभिव्यक्तिकारणानामभावाद्व्यक्तमत एवात्यन्तनिर्विकल्पकत्वान्मनसाप्यचिन्त्यं, **तथाप्यनन्तरूपं**- चन्द्रधरत्वादिसकलसाकारसगुणात्मकपंचविंशतिलीलाजालात्मक

स्वेच्छाविग्रहरूपमित्यर्थः । **यद्वा** न विद्यते अन्तो यस्य तदनन्तमनन्तं रूपं यस्य **तदनन्तरूपं**-अगणिताप्राकृतदिव्यमङ्गलाचारगुरुशिवचरप्रसादमहदिष्टप्राणभावादिनवलिङ्गमूर्ध्वलिङ्गादिरूपं वेत्यर्थः ।

**पंचविंशतिभेदैस्तु तन्मूर्तिर्विविधा भवेत् ।**
**नानारूपधरं देवं नानारूपसमन्वितम् ।**
**नानाचिह्नसमोपेतं नानालीलाधरं हरम् ॥**

वातुल, तत्वबोध पटलः

**स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने ।**
**स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे ॥**

सि. शि. परि. १

इति शिवागमाद्युक्तेः ।

**भावलिङ्गं परं तत्वं प्राणलिङ्गन्तु सूक्ष्मकम् ।**
**इष्टलिङ्गं भवेत् स्थूलमेतल्लिंगत्रयं स्मृतम् ॥**
**महालिङ्गं प्रसादाख्यं लिंगं च चरलिङ्गकम् ।**
**शिवलिङ्गं तथा चैव गुरुलिङ्गं ततः परम् ।**
**आचारलिङ्गमित्येव लिङ्गं षड्विधमुच्यते ॥**

अनु. सूत्र. अ. ३

इत्यनुभवसूत्रोक्तेः ।

**स्थिरेभिरङ्गैरुरुरूप उग्रः ।** श्री रुद्रसूक्तम्

**निधनपतये नमः, निधनपतान्तिकाय नमः, ऊर्ध्वाय नमः, ऊर्ध्वलिङ्गाय नमः, हिरण्याय नमः, हिरण्यलिङ्गाय नमः,**

महानारायण उ.

इति महानारायणश्रुतेश्च ।

**शिवं मङ्गलात्मकं, प्रशान्तं**-संसारसंस्पर्शव्यामोहविरहान्निस्तरं गोदधिवत्प्रकर्षेण शान्तं, **अमृतं**-अमरणं जननमरणरहितम् । अमृतत्वसाधनभूतनित्यानन्दलिङ्गरूपं वेत्यर्थः ।

**ये ह वा अमृतं सत्येन । धीराः सुकृतस्य लोके । ग्रीवायां बध्वा । अपि कक्ष आसनि । अति पाप्मानमतिमृत्युं तरन्ति ॥**

इति पैङ्गायनश्रुतेः

**ब्रह्म प्रजननं काटं पवित्रममृतं स्तपः ।**
**प्रस्तरोजनिमप्राणो देवो लिङ्गं तथैव च ।**
**पर्यायवाचका ह्येते लिङ्गस्य परमात्मनः ॥**
**लिङ्गं च काटं जनिमं ऋतं ब्रह्मेडितं परम् ।**
**सत्यं ज्ञानं सुखं नित्यं वाधकं शरणं श्रुतम् ।**
**एवमादीनि नामानि सन्ति लिङ्गस्य भूरिशः ॥**

इति वैदिकनिघण्टुक्रियासारोक्तेश्च ।

क्रियासारः उ. १, वीरशैवानन्दचं. पृ. ६२

**ब्रह्मयोनिं**-वेदकारणं, चतुर्मुखब्रह्मादीनामपि बीजं वेत्यर्थः । **ब्रह्म तत्वं तपो वेदे न द्वयोः पुंसि वेधसि** । इत्युक्तत्वात् ।

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं ।**

मुण्ड. मुं. ३, खं. १

इत्यादिश्रुतिप्रमाणाच्च ।

**आदिमध्यान्तविहीनं-आदौ मध्ये चान्ते** चावस्थितेन वस्त्वंतरेण परिच्छेदकेन विनिर्मुक्तं, **एकं**-अद्वितीयम्, सजातीय-विजातीयभेदरहितेष्टप्राणलिङ्गादिस्वगतभेदैकविशिष्टं वेत्यर्थः ।

**"एकमेवाद्वितीयं ब्रह्म"** त्रिपाद्विभूतिमहानारायणोपनिषत् अ. ३

**एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।**
**शिवतत्वं शिवाचार्याः स्थलमित्याहुरादरात् ॥**
**स्थलं नाम परं तत्वं शिवरुद्रादिसांज्ञिकम् ।**
**उपास्योपासकत्वेन स्वयमेव द्विधा भवेत् ॥**

अनु. सू. अ. ३

इति श्रुत्यागमाद्युक्तेः ।

**यद्वा**-सर्वदैकरूपं, वृध्यपक्षयविपरिणामशून्यमित्यर्थः । **विभुं**-सर्वव्यापकं, **चिदानन्दं** - सच्चिदान्दादिपंचलक्षणलक्षितमित्यर्थः । **अरूपं**-नीरूपं निष्कलं निराकाररूपं प्रापञ्चिकाकारशून्यं वेत्यर्थः । **अद्भुतं** - अजहर्यादिदेवानामप्याश्चर्यकरोरुलिङ्गरूपमद्भुतविराट्स्वरूपं वेत्यर्थः । **उमासहायं**-चिच्छक्तिवल्लभं, परशिवस्वरूपानतिरेकिण्या परशक्त्याऽविनाभावेन सहितमिष्टलिङ्गस्वरूपमित्यर्थः । तथाहि श्रूयते

**"नमः सोमाय च रुद्राय च"** रुद्राध्याय अ. ७

"नमोऽम्बिकापतये उमापतये" महानारायण उ.

रुद्रो लिङ्गमुमापीठं तस्मै तस्यै नमो नमः ॥

रुद्रहृदयोपनिषत्

पीठिका परमा शक्तिर्गोळः साक्षात् सदाशिवः ।
तयोरैक्यमिदं लिङ्गं भुक्तिदं मुक्तिदं द्विजाः ॥

श्रुतिसार भा. पृ. २८

न शिवेन विना शक्तिर्न देव्या च विना शिवः ।
नानयोरन्तरं किञ्चित् चन्द्रचन्द्रिकयोरिव ॥ इति

**प्रभुं**-ब्रह्मादिस्तम्बपर्यन्तानामपि जीवजन्तूनां पतिं, स्वामिनं कर्तुमकर्तुमन्यथाकर्तुमपि वा सर्वस्वतन्त्रमित्यर्थः ।

प्रभुः स्वतन्त्रोऽप्रभुरस्वतन्त्रः प्रभुर्यदेवेच्छति तत्करोमि ।
इच्छाज्ञानक्रियाशक्तित्रयं यस्यास्ति स प्रभुः ॥

वि. प्र. अधि. २

ब्रह्मादिस्तम्बपर्यन्तपशूनां पतिरीश्वरः ॥

विशेषार्थप्रकाशादावुक्तत्वात् ।

"एषामीशः पशुपतिः पशूनां" इति श्रुतेश्च ।

श्रीकरभाष्ये पृ. ४३२

**त्रिलोचनं**-त्रीणि लोचनानि सूर्येन्द्वग्निनेत्राणि यस्य तं, यद्वेच्छाज्ञानक्रियामयान्यक्षीणि यस्य तमित्यर्थः ।

इति ध्यात्वा पुनरपि ध्यायेदेवं सदाशिवम् ।
इच्छाज्ञानक्रियाशक्तिविलसल्लोचनत्रयम् ॥

**इच्छा ज्ञानं क्रिया चेति शम्भोरक्षित्रयं विदुः।** इत्युक्तेः ।

क्रियासारः उ. २-३-२६

**नीलकण्ठं**-शामग्रीवं, विषकण्ठमिति यावत् । **प्रशान्तं**-प्रकर्षेण शान्तं, तं परमेश्वरं सकलनिष्कलोभयात्मकमिष्टप्राणभावलिङ्ग रूपपरशिवमित्यर्थः ।

**योगिनां च यतीनां च ज्ञानिनां मन्त्रिणां तथा ।**
**ध्यानपूजानिमित्ताय सकलं निष्कलं भवेत् ॥**

वातुलशुद्धतन्त्रं, तत्वभेदपटलः

**सकलं निष्कलं सूक्ष्मं हिरण्मयमनामयम् ।**
**व्योमवत्सर्वसम्पूर्णं सर्वैश्वैर्यसमन्वितम् ॥**
**स्वतन्त्रं जगदाधारं शिवरुद्रादिसंज्ञिकम् ।**
**नित्यसंवेतचिच्छक्तियुक्तं साम्बं महेश्वरम् ॥**

श्रीकरभाष्यम् पृ. २५०

इति शिवागमोक्तेः ।

**मुनिः**-मन्यत इति मुनिर्ज्ञानी शिवानुभवज्ञानी मुमुक्षु-लिङ्गाङ्गी स्वेष्टप्राणभावलिङ्गाद्यनुसन्धानशीलः शिवभक्तमाहेश्वरादि-रित्यर्थः । **ध्यात्वा**-स्वहृत्कमले स्वस्वरूपतया चिन्तयित्वेत्यर्थः । **तमसः परस्तात्**-मायायाः परं महाप्रळयसाक्षिणं तमोरूपप्रकृति-विलक्षणं वेत्यर्थः । तमोरूपप्रकृतिमण्डलस्योपरिभागस्थितमहाकैलास-वासिनमिति यावत् । **समस्तसाक्षिं**-आकाशादिभूतभौतिकस्य सर्वस्य

जगतः साक्षिणं, द्रष्टारमिति यावत् । **भूतयोनिं**-तस्य जगतः कारणमिष्टलिंगाद्यभिधानं परशिवमित्यर्थः ।

**यद्भूतयोनिं परिपश्यन्ति धीराः** । इतीतरश्रुतेः ।

मुण्डक. मुं. १, ख. १

**गच्छति**-प्राप्नोतीति गम्लृगताविति धातोः । तथा चोक्तं सूत संहितादिषु ।

**विशुद्धं विरजं तस्य मध्ये विशदमीश्वरम् ।**
**अनन्तं शुद्धमव्यक्तमचिन्त्यं सर्वजन्तुभिः ॥**
**शिवं प्रशान्तममृतं वेदयोनिं सुरर्षभाः ।**
**आदिमध्यान्तनिर्मुक्तमेकं साक्षाद्विभुं तथा ॥**
**अरूपं सच्चिदानन्दमद्भुतं परमेश्वरम् ।**
**उमासहायमोमर्थं प्रभुं साक्षात्त्रिलोचनम् ॥**

ब्र. गी. अ. ८

**न च नामानि रूपाणि शिवस्य परमात्मनः ।**
**तथापि मायया तस्य नामरूपे प्रकल्पिते ॥**
**अरूपस्य शिवस्यापि मूर्तिर्ध्येया ह्युपासकैः ।**
**उमार्धविग्रहा शुक्ला त्रिनेत्रा चन्द्रशेखरा ॥**
**नीलग्रीवा परानन्दप्रमोदा ताण्डवप्रिया ।**
**ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः ॥**

सर्वमूर्तिविहीनस्य सर्वमूर्तेः शिवस्य तु ।
तथाप्येषा परा मूर्तिरित्येषा शाश्वती श्रुतिः ॥

सूत. सं.—यज्ञवैभवखण्डः अ. २८

इति सूतसंहितायाम् ।

निरस्तदोषसम्बन्धं निरुपाधिकमव्ययम् ।
दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम् ॥
चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम् ।
शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः ॥
विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम् ॥
अप्राकृतगुणाधारमनन्तमहिमास्पदम् ।
अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम् ॥
निर्विकल्पं निराकारं निरस्ताशेषविप्लवम् ।
स्वप्रकाशं पराकाशमनौपम्यमनामयम् ॥
सर्वज्ञं सर्वगं शान्तं सर्वशक्तिनिरङ्कुशम् ।
शिवरुद्रमहादेवभवादिपदसंज्ञितम् ॥
अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम् ॥

सि. शि. प. २

इति सिद्धान्तशिखामणौ ।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन् यदास्ते ॥

**आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय। प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्।**
इति पुरुषसूक्ते।

"**योनिश्च हि गीयत**" इति बादरायणसूत्रस्य साक्षात् परमेश्वर एव भूतयोनिरित्युच्यत इति श्रीमन्नीलकण्ठभाष्यम्। देव एव देवतेत्युच्यते परशब्दाबहुत्ववाचिदेवशब्दात्तल्। "**परो देवो महादेवः सोऽयं देवस्तदैक्षत। द्यावाभूमिं जनयन्देव एक**" इति स महादेव एव सकलभूतकारणं परं ब्रह्म श्रूयते इत्यादि। "**तानि परे तथा ह्याह**"।

ब्र. सू. अ. ४, सू. १४

इति सूत्रे श्रीमन्नीलकण्ठभाष्ये प्रपञ्चितमिति।

नीलकण्ठ भा. पृ. १३१

**मूलम्—**

**स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमस्स्वराट्।**
**स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः॥ ८॥**
**स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्।**
**ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥ ९॥**

**स ब्रह्मेति**-बृंहतीति **ब्रह्मा**, शिवमस्यास्तीति **शिवः**, इन्दतीति **इन्द्रः**, न क्षरतीत्य**क्षरः**, वेष्टि व्याप्नोतीति **विष्णु**रित्यादियोगवृत्त्या

शिवजगन्मयत्वसर्वगत्वादिना वा भूतभविष्यद्वर्तमानकालीनब्रह्मेन्द्रोपेन्द्रादिसर्वशब्दाभिधेयः सः साकारनिराकारात्मकेष्टप्राणभावलिङ्गरूपी परमात्मैव नान्यः कोऽपीति तमिष्टलिङ्गादिरूपिणमीश्वरं, ज्ञात्वा-बुध्वैवेत्यर्थः ।

महादेवस्तु सर्वात्मा सर्ववस्त्ववभासकः ।
सर्वानन्दकरः पूर्णः सर्वदेवोत्तमोत्तमः ॥

सू. सं. यज्ञ. अ ४०

पुरुषो वै रुद्रस्तन्महो नमः । विश्वं भूतं चित्रं बहुधा जातं जायमानं च यत्, सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमः ।

सर्वज्ञः सर्ववित् साक्षी सर्वस्य जगतः सदा ।
परमार्थपरानन्दः परज्ञानघनाद्वयः ॥
शिवः शम्भुर्महादेवो रुद्रो ब्रह्म महेश्वरः ।
स्थाणुः पशुपतिर्विष्णुरीश ईशान ईश्वरः ॥
परमात्मा परः पारः पुरुषः परमेश्वरः ।
पुराणपरमः पूर्णस्तत्वं काष्ठा परा गतिः ॥
पतिर्देवो हरो हर्ता भर्ता स्रष्टा पुरातनः ।
महाव्यासो महाधारः अत्ता विश्वाधिकः प्रभुः ॥
महर्षिर्भूतपालोऽग्निराकाशो हरिरव्ययः ।
प्राणो ज्योतिः पुमान् भीमः अन्तर्यामी सनातनः ॥
अक्षरो दहरः साक्षादपरोक्षः स्वयं प्रभुः ।
असंग आत्मा निर्द्वन्द्वः प्रत्यगात्मादिसंज्ञितः ॥

उमासहायो भगवन्नीलकण्ठास्त्रिलोचनः ।
ब्रह्मणा विष्णुना चैव रुद्रेणापि सदा हृदि ॥
उपास्यमानः सर्वात्मा सर्ववस्तुविवर्जितः ।
न च नामानि रूपाणि शिवस्य परमात्मनः ॥
तथापि मायया तस्य नामरूपे प्रकल्पिते ।
शिवो रुद्रो महादेवः शङ्करो ब्रह्मसत्परम् ॥
एवमादीनि नामानि विशिष्टानि परस्य तु ॥
विष्णुनारायणादीनि नामानि परमेश्वरे ।
कथंचिद्योगवृत्त्या तु वर्तन्ते न तु मुख्यया ॥
विश्वरूपाय विश्वासलभ्याय विदितात्मने ॥

सू. सं. मुक्ति. अ. २, यज्ञवै. अ. २५-२७

इति आगमसूतसंहितादिषु ।

सर्वं खल्विदं ब्रह्म, एतत्सर्वमात्मैव, यस्मिन्निदं संच-विचैति सर्वं, यस्मिन्देवा अधिविश्वे निषेदुः, तदेव भूतं तदु भव्यम्,

निरालम्ब-नारायणादि

"पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्"

श्वेताश्व. अ. ३

"भूतं च मे भविष्यच्च मे"

रुद्राध्याय अ. २

"विश्वरूपाय वै नमः"

महानारायणोपनिषत्

"विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः"

रु. अ. ४

"पूर्णमिदं पूर्णमदः" "ईशावास्यमिदं सर्वं"

ईश.

"क्षरं प्रधानममृताक्षरं हरः येनाक्षरपुरुषं वेद सत्यम्"

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥

श्वेताश्व. अ. १-३

इति श्वेताश्वतरादिश्रुतौ ।

सर्वगोऽपि स्थितः शम्भुः स्वाधारे हि विशेषतः ।
तस्मादन्यत्र विमुखः स्वेष्टलिङ्गे यजेच्छिवम् ॥
शिवस्य सर्वगत्वेऽपि सर्वत्र रतिवर्जितः ।
स्वेष्टलिङ्गे यजन्देवं सर्वगत्वनिरासकः ॥
पूजाविधौ नियम्यत्वाल्लिङ्गमात्रे स्थितं शिवम् ।
पूजयन्नपि देवस्य सर्वगत्वं विभावयेत् ॥

सि. शि. प. १०

इत्यादिना बहुधा प्रपंचितत्वात् ।

यश्च ब्रह्मा यश्च विष्णुरित्यारभ्य ब्रह्मविष्णुरुद्रोमाविनायकादि-सर्वप्रपंचवाच्यत्वं प्रतिपाद्यते तथा सर्वश्रुति-सामरस्यसर्वचिदचिद्वस्त्वं-तर्यामितया सर्वशब्दवाच्यः परमेश्वरश्शिव इति विज्ञायते ।

देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीदहमेकः प्रथममासम् वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः ॥ सोऽन्तरा-दन्तरं प्राविशत् ।

इत्युपक्रम्य यो वै रुद्रो स भगवान् यश्च ब्रह्मा यश्च विष्णु-र्रित्यादिना—अथर्वशिरसि ब्रह्मविष्णुरुद्रेन्द्रचन्द्रदिनेंद्रादिशब्दानां परशिववाचकत्वेन व्यवस्थापनात् । इति ।

"**अवस्थितेरिति काशकृत्स्नः**" ब्र. सू. अ. १, पा. ४

"**गतिसामान्यात्**" ब्र. सू. पा. १

इति सूत्रे श्रीमन्नीलकण्ठश्रीकरभाष्ययोः प्रदर्शितत्वाच्च ।

ब्रह्माद्यखिलशब्दवाच्यः सर्वगतोऽपि स परशिवो विष्णुब्रह्मादि निखिलमुमुक्षुजनोपासनार्थं मुख्यतः स्थूलसूक्ष्मपरेतित्रिविधरूपस्तेषु गुरूपदिष्टस्वस्वरूपेष्टलिङ्गात्मकपररूप एव धीरैर्लिङ्गाङ्गिभिर्भक्तमाहेश्वरादिभिः षट्स्थलब्रह्मिभिरुपास्यो नान्यः स्थूलसूक्ष्मरूपो ब्रह्मविष्ण्वादिदेवतान्तरश्चेति निगमागमश्रुतिस्मृतिपुराणेतिहासाद्यनेकप्रबलप्रमाणग्रन्थोक्तयुक्तिमनुसृत्य ब्रह्मसूत्रादिभाष्यकृन्नीलकण्ठपण्डिताराध्यप्रभृतिभिः शिवाचार्यैर्राद्धान्तितो विशेषार्थ इत्यस्माकमाशयः । **तं सनातनं**-पुरातनं परशिवलिङ्गरूपिणं शिवमित्यर्थः । **ज्ञात्वा**-अन्तर्विचारेण विदित्वेति विशिष्टार्थो न तु बाह्यक्रियया सर्वत्रोपास्यत्व बुद्धिः कार्येति भावः, तथा चोक्तमागमाम्नायादिषु

**तदीयं त्रिविधं रूपं स्थूलं सूक्ष्मं च तत्परम् ।**
**अस्मदाद्यमरैर्दृश्यं स्थूलं सूक्ष्मं च योगिभिः ॥**
**ततः परं तु यन्नित्यं ज्ञानमानन्दमव्ययम् ।**
**तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यं तद्व्रतमास्थितैः ॥**

वातुलशुद्धाख्यतन्त्रतत्वभेदपटलः

इति तन्त्रसंग्रहे ।

अतः शिवः सर्वजगद्विभासकः स्वयंप्रकाशः स्वयमेव केवलः।
मयोदितो लिङ्गमिति द्विजर्षभास्तदेव पूज्यं श्रुतिमस्तकास्थितम् ॥

सू. स. यज्ञ. अ. २८

अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम् ।
उपासनार्थमन्तस्थं परिच्छिन्नं स्वमायया ॥

सि. शि. प. ६

अलिङ्गमेकमव्यक्तं लिङ्गं ब्रह्मेति निश्चितम् ।
स्वयं ज्योतिः परं तत्वं परे व्योम्नि व्यवस्थितम् ॥

कूर्म. पु. भा. २, अ. १०

सूक्ष्मत्वात्कारणत्वाच्च लयनाद्गमनादपि ।
लक्षणात्परमेशस्य लिङ्गमित्याभिधीयते ॥

योगशिखोपनिषत् अ. २

प्रत्यगानन्दरूपात्मा मूर्ध्नि स्थाने परे पदे ।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥

त्रिशिखब्राह्मणोपनिषत्

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

महानारायण

गुरुर्लिङ्गं समादाय शिष्यमस्तकचित्कलाम् ।
निजस्वभावमात्रेण विलोक्याकृष्य तां कलाम् ।
लिङ्गे संस्थाप्य पादाम्बुस्नानं कृत्वा चरस्य च ॥

वीरभद्रपुराणम्

स्वशरीरे स्वयं ज्योतिः स्वरूपं पारमार्थिकम् ।
क्षीणदोषाः प्रपश्यन्ति नेतरे माययावृताः ॥

पाशुपतब्रह्मोपनिषत्

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।

ब्रह्म. गीत. अ. १

निष्कलं निर्गुणं शान्तं निर्विकारं निराश्रयम् ।
निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥
ज्योतिषामपि तत् ज्योतिस्तमः पारे प्रतिष्ठितम् ।
भावाभावविनिर्मुक्तं भावनामात्रगोचरम् ॥

योगशिखोपनिषत् अ. ३

साकारमनित्यं नित्यं निराकारमिति श्रुतेः ।

त्रिपाद्विभूति महानारायणोपनिषत् अ. २

हृत्पुण्डरीकमध्यस्थं चैतन्यं ज्योतिरव्ययम् ।
कदम्बगोळकाकारं तुर्यातीतं परात्परम् ॥

त्रिशिखब्राह्मणोपनिषत्

यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् ॥
तत्सूत्रं धारयेद्योगी योगवित्तत्वदर्शिनाम् ।

ब्रह्मोपनिषत्

एक एव शिवो नित्यस्ततोन्यत्सकलं मृषा ।
तस्मात्सर्वान्परित्यज्य विष्णुब्रह्मादिकान्सुरान् ॥

शिव एव सदा ध्येयः सर्वसंसारमोचकः ॥

शरभोपनिषत् ३०-३१

सन्त्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवांछन्ति त्यक्तहस्तस्थकौस्तुभाः ॥

महोपनिषत् अ. ३

**मुनिः**-मननशीलो **धीरो**-धीमान् लिङ्गाङ्गी शिवभक्तमाहेश्वरादिरित्यर्थः । **मृत्युं**-मरणं तदुपलक्षितजननमपि । **अत्येति**-ध्यान ज्ञानात्मकशिवयोगमहामखेनोत्तरति । अजननमरणधर्मवान् साक्षाच्छिवो भवतीत्यर्थः । इण् गताविति धातोः ।

ब्रह्मवेद ब्रह्मैव भवति, ईशं ज्ञात्वा अमृता भवन्ति ।
तरति शोकमात्मवित् । ज्ञात्वा शान्तं शान्तिमत्यन्तमेति ॥

श्वेत. अ. ३-४-६

अजमात्मानं मत्वा धीरो न शोचति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।

सुबालोपनिषत् खं. ३

ध्यानज्ञानात्मकः सूक्ष्मः शिवयोगो महामखः ।

क्रियासार उ. २७

कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ।
मानवः शिवयोगेन शिवो भवति निश्चयम् ॥

लिं. पु. भा. २, अ. २१

इति श्रुत्याद्युक्तेश्च ।

**विमुक्तये**-विमोक्षाय, सकलदुःखनिवृत्तिनित्यानन्दपदप्राप्ति-रूपलिङ्गाङ्गसामरस्यसुखायेत्यर्थः। एतच्छिवयोगमार्गं विना **अन्यः पन्था**-अन्यः कोऽपि मार्गः। **न**-नास्त्येवेत्यर्थः।

**तमेवं विदित्वा अतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय॥**
इति पुरुषसूक्तोक्तेः।

**मूलम्—**

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**संपश्यन् ब्रह्म परमं याति नान्येन हेतुना॥ १०॥**

**सर्वभूतस्थमिति—आत्मानं**-परमात्मानमिष्टलिङ्गरूपपरशिव-मित्यर्थः। **सर्वभूतस्थं**-ब्रह्मादिस्तंबान्तेषु सर्वेषु भूतेषु तिष्ठतीति सर्व-भूतस्थमिति ब्रह्मादिस्तम्बपर्यन्तसमस्तचराचरवस्तुष्वन्तर्यामित्वेन ब्रह्माण्डे भानुवद्गुहादिषु प्रदीपवद्घटादिष्वाकाशवदविकारात्मना वर्त-मानमित्यर्थः। **आत्मनि**-परमात्मवस्तुनि, शिवलिङ्ग इत्यर्थः। **सर्वभूतानि**-ब्रह्मादिस्तम्बान्तानि सकलस्थावरजङ्गमवस्तून्यपि सूत्रे मणिगणा इव मयूराण्डरसे करचरणाद्यवयव इव, वटबीजे महातरु-मूलशाखादिवद्वा विद्यन्त इति च। मुनिर्ज्ञानी शिवभक्तमाहेश्वरादिः सम्पश्यन्—अन्तर्विचारेण परिजानन् सन्, **परमं ब्रह्म**-परतरशिवलिङ्ग रूपपरमशिवम्। **याति**-स्वस्वरूपतया प्राप्नोतीति भावः। या प्रापण इति धातोः। **अन्येन हेतुना**-एतद्विना अन्येन केनापि कारणेन। **न याति**-न प्राप्नोतीत्यर्थः। तथा चोक्तं श्रुत्यन्तरादिषु।

रुद्रो जनानां हृदि सन्निविष्टः । यो रुद्रोऽग्नौ योऽप्सु य ओषधीषु यो रुद्रो विश्वा भुवनानि विवेश तस्मै रुद्राय नमो अस्तु ॥

शतरुद्रीय

इत्यादिश्रुतौ ।

"सर्वभूतगुहाशयम्"

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ. गी. अ. १८

तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ।

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ॥

सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥

ईशावास्य

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।

ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।

सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ।

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥

तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

इति गीतादिषु ।

यस्यान्तस्थानि भूतानि यस्मात् सर्वं प्रवर्तते ।

यदाहुस्तत्परं तत्त्वं स देवस्स्यान्महेश्वरः ॥

कूर्म. पु. भा. २, अ. ३१

चन्द्रकान्ते यथा तोयं सूर्यकान्ते यथानलः ।
बीजे यथाङ्कुरस्सिद्धस्तथात्मनि शिवः स्थितः ॥

सि. शि. प. ५

इति सिद्धान्तशिखामणौ ।

**मूलम्—**

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात्पापं दहति पण्डितः ॥ ११ ॥

**आत्मानमिति—पण्डितः**—शिवानुभवज्ञानी भक्तमाहेश्वरादिरित्यर्थः । **आत्मानं**-स्वनिर्मलचित्तमित्यर्थः । "**आत्मा चित्ते शरीरे च**" इत्यमरोक्तेः । **अरणिं कृत्वा**-अधः काष्ठं कृत्वेत्यर्थः । **प्रणवं**-अकारोकारमकारमात्रात्रयात्मकमोंकारमित्यर्थः । ॐकाररूपब्रह्मलिङ्गापरपर्यायसदाशिवमिति यावत् । **उत्तरारणिं च कृत्वा**-उपरिकाष्ठं च कृत्वेत्यर्थः । **ध्याननिर्मथनाभ्यासात्**-अनुदिनमुचित काले तैलधारावद्दीर्घघण्टानिनादवदविच्छिन्नमुच्चारणानुचिन्तनरूपाभ्यासाल्लिङ्गाङ्गसामरस्यबोधकप्रणवपञ्चाक्षरीजपाभ्यासादित्यर्थः । **पापं**-तनुत्राज्मनःकृतमविदितं विदितं वाखिलदुरितमपीत्यर्थः । **दहति**-दहनं करोति दह भस्मीकरण इति धातोः । तथाहि श्रूयते श्रुति शिवागमादिषु ।

"**ॐ तद्ब्रह्म**" प्रणवो धनुः शरो ह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते ।

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥
ह्रस्वो दहति पापानि दीर्घः संपत्प्रदोऽव्ययः ।
अर्धमात्रासमायुक्तः प्रणवो मोक्षदायकः ॥
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ।
अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥
हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम् ।
अङ्गुष्ठमात्रमचलं ध्यायेदोङ्कारमीश्वरम् ॥

ध्यानबिन्दूपनिषत्

ध्यात्वा मध्यस्थमात्मानं कलशान्तरदीपवत् ।
अङ्गुष्ठमात्रमात्मानमधूमज्योतिरूपकम् ॥
प्रकाशयन्तमन्तस्थं ध्यायेत्कूटस्थमव्ययम् ।
ध्यायन्नास्ते मुनिश्चैव चासुप्तेरामृतेस्तु यः ॥
जीवन्मुक्तः स विज्ञेयः स धन्यः कृतकृत्यवान् ॥

पैङ्गलोपनिषत् अ. ३

ॐकारः सर्वमन्त्राणमुत्तमः परिकीर्तितः ।
ॐकारेण प्लवेनैव संसाराब्धिं तरिष्यति ॥
उमार्धविग्रहो देवो रुद्रः सत्यादिलक्षणः ।
संसारतारकस्यास्य प्रणवस्यार्थ उच्यते ॥ सू. सं. यज्ञ. अ. २

अथ हैनं ब्रह्मचारिण ऊचुः । किं जप्येनामृतत्वं ब्रूहीति ।
स होवाच याज्ञवल्क्यः शतरुद्रीयेणेत्येतानि ह वा अमृतस्य नाम धेयान्येतैर्ह वा अमृता भवन्तीति

जाबालोपनिषत् २

शतरुद्रीयसंज्ञस्तु मन्त्रो जप्यो महत्तरः ।
रुद्रजापी विमुच्येत महापातकपञ्जरात् ॥
सम्यक्ज्ञानं च लभते तेन मुच्येत बन्धनात् ॥
अनेन सदृशं जप्यं नास्ति सत्यं श्रुतौ स्मृतौ ।
एषा पंचाक्षरी विद्या शतरुद्रीयमध्यगा ।
पंचाक्षरे महादेवः सर्वदा सुप्रतिष्ठितः ॥
आचार्यमुखतः प्राज्ञा सिद्धत्येवाचिरेण तु ।
आचार्यरहितो मन्त्रः पुंसोऽनर्थस्य कारणम् ॥

सू. सं. यज्ञः अ. २४

तस्माज्जीवो भवेच्छम्भुः क्रिमिवत् कीटचिन्तनात् ।

श्रीकर भा. पृ. ४२

ॐकारात्मकलिङ्गरूपसदाशिवस्मरणपूर्वकध्यानेन—रसवेधेन ताम्रादिकं यथा स्वभावसिद्धताम्रादिकं विहाय हेमत्वं प्राप्नोति । क्रिमिः कीटको भृङ्गध्यानेन स्वभाविकक्रिमित्वनिवृत्तिपूर्वकभृङ्गत्वं यथा प्राप्नोति तथा परशिवात्मकत्वेन प्रणवोपासनं यो जीवः करोति स तथैव स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वं प्राप्नोतीति रहस्यमुपदिष्ट-मिति । **ॐमिति ब्रह्म ओमितीदँ सर्वम्** इत्यादि शिक्षावल्यष्टमानु-वाकभाष्ये वृषभपण्डिताराध्यचरणैः प्रदर्शितमत्र संक्षिप्तं इति ।

# प्रसादि-प्राणलिङ्गिस्थले

मूलम्——स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥

**स एवेति**-प्रणवात्मकशिव एव लिङ्गमेवेत्यर्थः । **मायापरिमोहितात्मा**-माययाऽविद्यया परिमोहितो व्यामोहित आत्मा यस्य सः तथा भूतः सन्, अनाद्यविद्यासंबंधात्किंचिज्ञत्वकिंचित्कर्तृत्वादि धर्मवान् जीवात्मा सन्नित्यर्थः । **शरीरं**-देहं तदुपलक्षितेन्द्रियादिकमपीत्यर्थः । **आस्थाय**-उपस्थाय । सङ्गम्योपलब्ध्वेति भावः । **स्त्र्यन्नपानादिविचित्रभोगैः** - वनिताशनवसनादिनानाविचित्रभोग - साधनैः सह । **सर्वं**-समस्तव्यवहारादिकमपि । **करोति**-कुरुते आचरति, डु कृञ् करण इति धातोः । **स एव**-स विश्वाख्यो जीव एव । **जाग्रत्परितृप्तिं**-जाग्रदवस्थायां संतृप्तिम् । **एति**-प्राप्नोति । इण् गताविति धातोः । **स जीवः**-स तैजसाख्यो जीव एवेत्यर्थः । **स्वप्ने**-देहेन्द्रियव्यापारशून्ये केवलमानसिकादि

व्यापारात्मके स्वप्नावस्थायामित्यर्थः । संकुचितावयवकूर्मवद्वा-समानावस्थायामिति यावत् । **स्वमायया**-स्वकीयाऽविद्यया **कल्पित जीवलोके**-संकल्पितजीवप्रपञ्चे । **सुखदुःखभोक्ता**-सुखं च दुःखं च सुखदुःखे, ते भुङ्क्त इति सुखदुःखभोक्ता । जाग्रत्कृतकर्म-वासनानुसारेण सुखदुःखेऽनुभवन्सन्नित्यर्थः । **सुषुप्तिकाले**-केवल तमसावृतमायावृत्यात्मकसुषुप्त्यवस्थायामित्यर्थः । स्वार्भकान् स्वान्तर्गर्भीकृत्य निद्रायां स्थितकुक्कुटवद्वासमानावस्थायामिति यावत् । **सकले**-निखिलमनोव्यापारेऽपि विलीने सति । केवलतमसावृतमाया-वृत्तौ तल्लीने सतीत्यर्थः । **सः**-तत्प्राज्ञाख्यो जीवः । **तमोभिभूतः**-केवलतमसावृतः सन् । **सुखरूपं**-सुखस्वरूपनिद्रानन्दम् "**सुख-महमस्वाप्सं न किञ्चिद्वेदिषम्**" इत्याकारात्मकप्राकृतिका-नन्दमित्यर्थः । **एति**-प्राप्नोति इण् गताविति धातोः । बद्धजीवस्य-व्यवहारपद्धतिरियं किन्तु त्यागभोगयोगाङ्गात्मको विश्वतैजस प्राज्ञाख्यः शुद्धजीवस्तु तत्तदवस्थासु तत्तद्व्यापारादिकमपि सर्वं तत्तल्लिङ्गमुखार्पणधिया भक्त्या च करोति भुंक्ते चात एव स लिङ्गार्पितोपभोगेन तन्निर्लेपतामेवेयादिति विशेषस्तयोरेतादृशं वैलक्षण्यं ज्ञेयमिति भावोऽलमतिविस्तरेण ।

"**अंशो नानाव्यपदेशात्**" ब्र. सू. अ. २, पा ३, सू. ४०

**अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः ।**
**देवतिर्यङ्मनुष्यादिजातिभेदे व्यवस्थितः ।**
**मायी महेश्वरस्तेषां प्रेरको हृदि संस्थितः ॥**

सि. शि. पं. ५

यथा सुदीप्तात्पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते। सरूपाः तथाक्षाराद्विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियंति ।

मुं. म. २, खं. १

आलयः सर्वभूतानां लोकानां सर्वसम्पदाम् ।
यद्भवेत् परमं ब्रह्म स्थलं तत्प्राहुरक्षरम् ॥
परनिर्वाणनिष्ठानां यद्भवेत्परमं पदम् ।
तदाहुः स्थलमद्वैतं शिवज्ञानैकतत्पराः ॥
स्वशक्तिक्षोभमात्रेण स्थलं तद्विविधं भवेत् ।
शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता ।
शक्त्या प्रपञ्चसृष्टिस्स्याद्भक्त्या तद्विलयो मतः ॥
शक्तिवैचित्र्यतो रूपं नीरूपमपि याति हि ।
भक्तिवैचित्र्यतो रूपमपि नीरूपतामियात् ॥
आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ।
स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ॥
स्थूलद्रव्यं भवेत् रूपं प्रविविक्तं रुचिर्भवेत् ।
आनन्दस्तु भवेत् तृप्तिरेवमेव पृथक् क्रमात् ॥
रूपद्रव्यार्पको विश्व इष्टलिंङ्गे स्वभावतः ।
रुचिद्रव्यार्पकः साक्षात् प्राणलिङ्गे तु तैजसः ॥
भावलिङ्गे सदा प्राज्ञ आनन्दार्पक उच्यते ।
लिङ्गार्पणधिया ह्यात्मा प्रसादसुखमश्नुते ॥

तत्तदर्पणतो लब्धं प्रसादं तत्तदादरात् ।
भुङ्क्ते यत्नात् स्वयं विश्वतैजसप्राज्ञरूपतः ॥
जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थासु सर्वदा ।
लिङ्गार्पितोपभोगेन निर्लेपोऽयं न संशयः ॥
लेपोऽङ्गं न जहेज्जातु तज्ज्ञं स्पृशति न क्वचित् ।
सर्पिषा लिप्यते पाणी रसना नैव लिप्यते ॥
यथा कालिकया दृष्टौ संपृक्तापि न लिप्यते ।
पक्ष्मणोरन्तरा तारा तथा सम्यक् शिवात्मवित् ॥
शरीरादिपदार्थांश्च दत्वा दानं समर्पणम् ।
समर्प्य सोऽहमस्मीति दासोऽहं भाव उच्यते ॥
इन्द्रियादागतं किञ्चिद्यत्सुखं तच्छिवार्पितम् ।
तत्प्रसादन्तु भोक्तव्यं तदिन्द्रियमुखेन च ।
येन गन्धरसोरूपस्पर्शशब्दरातिक्रियाः ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥
एवं लिङ्गार्पितं सर्वमिति यो वेत्ति तत्वतः ।
सोऽश्नुते सकलान्भोगान्विपश्चित् ब्रह्मणा सह ॥
लिङ्गदेही शिवात्मायं लिङ्गाचारो न लौकिकः ।
सर्वं लिङ्गमयं रूपं लिङ्गेन सममश्नुते ॥
सर्वाङ्गलिङ्गमेव स्यादन्नपानाद्यमर्पितम् ।
प्रसादतृप्तिरेव स्यात्सर्वं लिङ्गमयत्वतः ॥
एतदर्पणसद्भावज्ञानं वेदान्तवाक्यजम् ।
गुरूपदेशतः साध्यं नान्यथा शास्त्रकोटिभिः ॥

अनु. सू. अ. २-७

अनात्मात्मेत्युभे तत्त्वे वेदितव्ये विवेकतः ।
अनात्मरूपो देहादिरात्मा तद्व्यतिरिच्यते ॥
अनात्माचारोऽनाचार ईरितः समलः सुखम् ।
देहादिधर्मो ह्यज्ञानलक्षणो लौकिको जडः ॥
अनात्माचारतत्त्वज्ञैरनाचारः प्रकीर्तितः ।
आत्माचारो ह्यदेहादिधर्मः सुज्ञानलक्षणः ॥
अलौकिकस्स्यादजडः सद्भिराचार आदृतः ॥

विशेषार्थ प्र. अ. ३

जाग्रत्स्वप्नसुषुप्त्याख्यावस्थारूपेण भाति यः ।
स विश्वतैजसप्राज्ञसमाख्यः क्रमशो भवेत् ॥
विश्वो हि स्थूलभुक् नित्यं तैजसः प्रविविक्तभुक् ।
प्राज्ञस्त्वानन्दभुक् साक्षी केवलस्सुखलक्षणः ॥

ब्र. गी. अ. ८

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥

कठ. उ. अ. २, व. ५

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्मणोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिः प्रज्ञः सप्तांग एकोनविंशतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः ॥ स्वप्नस्थानोऽन्तः प्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः, प्रविविक्तभुक् तैजसो द्वितीयः पादः । यत्र सुप्तो न कञ्चन कामं कामयते कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् ।

सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ एषु सर्वेश्वर एषु सर्वज्ञ एषोऽन्तर्याम्येषु योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् ॥ अदृष्टमव्यवहार्यमग्राह्यमलक्षणमव्यपदेश्यमेकात्म-प्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स विज्ञेयः ।

माण्डूक्य.

बद्धशुद्धादिभेदेन जीवत्रयमिदं स्मृतम् ।
गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जितः ॥
स्वकर्तृत्वाभिमानी तु बद्धः स पशुरुच्यते ।
गुरुदीक्षां परां लब्ध्वा कैङ्कर्यत्रयसंयुतः ॥
शान्त्यादिसद्गुणोपेतो मुमुक्षू रागवर्जितः ।
शिवाधीनसुधीर्भक्तशुद्धजीव इति स्मृतः ॥
शिवयोगशिवज्ञानविभवानन्दसंयुतः ।
प्रचण्डातपमध्यस्थशुद्धकर्पूरदीपवत् ॥
शिवाकारे पराकाशे कोटिसूर्यप्रकाशके ।
विलीनचित्तवृत्तिस्तु मुक्तजीव इति स्मृतः ॥

श्रीकरभा. २०७

इति सूत्रश्रुत्यनुभवसूत्रागमादिषु बहुधा प्रपंचितमति विस्तर-भयान्नलिख्यतेऽस्माभिरत्र ।

मूलम्—

पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तुजातं सकलं विचित्रम् ।
आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च
॥ १४ ॥

**पुनश्चेति-पुनश्च** पुनरपि, **स एव जीवः**-स प्राज्ञाख्यो जीव एव, **जन्मान्तरकर्मयोगात्**-अन्यज्जन्म जन्मान्तरं तस्य कर्म जन्मान्तरकर्म तस्य योगस्तस्मात्-जन्मान्तरीयकर्मवासनासंबन्धादित्यर्थः । **स्वपिति**-शेते, **प्रबुद्धः**-सुषुप्त्यवस्थायां जाग्रतः सन्, **पुरत्रये**-पुराणां स्थूलसूक्ष्मकारणशरीराणां त्रयं तस्मिन् तनुत्रये **क्रीडति**-विनोदं करोति, क्रीडा विहरण इति धातोः । **ततस्तु**-तस्मादेव, **यश्च जीवः**-यो विश्वादिजीवः साक्षात् शिव एव न त्वन्यः । चकारस्त्वेवकारार्थे विद्यते, तस्माज्जातं तत्प्रादुर्भूतं, **विचित्रं**-आश्चर्यं नानानामरूपात्मकं वेत्यर्थः, **सकलं च**-समस्तैतच्चराचरजगत्, **पुरत्रयं** च स्थूलादिदेहत्रयं चकारादन्यदपि, **यस्मिन्**-यत्परब्रह्माणि परशिवलिङ्गे, **लयं**-लीनं दर्शनाभावं नत्वत्यन्तनाशमित्यर्थः । **याति**-प्राप्नोति, यद्ब्रह्मणो लिङ्गादुद्भवति च, तद्ब्रह्मलिङ्गम् । **आधारं**-अखिलजगदाधारं, **आनन्दं**-नित्यानन्दरूपं, **अखण्डबोधं**-परिपूर्णज्ञानात्मकमिति ज्ञेयमित्यर्थः । तथाहि श्रूयते ।

**एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।**
**शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ॥**

यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत् प्रोच्यते ततः ॥

अ. सू. अ. २

लीयते गम्यते यत्र जगदेतच्चराचरम् ।
तल्लिङ्गमिति विख्यातं लिङ्गतत्त्वपरायणैः ॥

इत्यागमे

विश्वं भूतं चित्रं बहुधा जातं जायमानं च यत् सर्वो-ह्येष रुद्रस्तस्मै रुद्राय नमः ।

नारायणोपनिषत्

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रति तिष्ठन्ति यत्र । तदक्षरं वेद्यते यस्तु स सर्वज्ञः सर्वमेव विवेशेति

प्रश्न. उ. ४

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वै तत् ॥ सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः । एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ इति

कठ. अ. २, व. २

**मूलम्—**

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**

**खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥ १५ ॥**

**एतस्मादिति—एतस्मात्**-एतद्ब्रह्मणः परशिवलिङ्गादित्यर्थः । **प्राणः**-सर्वचेतनान्तर्वृत्तिरूपप्राणानिल इत्यर्थः । **"स प्राणमसृजत आत्मन एष प्राणो जायत"** इत्यादिश्रुतेः । **मनः**-सङ्कल्पविकल्पात्मकं मनः । **सर्वेन्द्रियाणि च**-चक्षुरादिसकलेन्द्रियाणि च । **खं**-आकाशः । **वायुः**-मरुत्, **ज्योतिः**-अग्निः । **आपः**-जलम् । **विश्वस्य धारिणी**-विश्वंभरी जगदाश्रयेत्यर्थः । **पृथ्वी च**-भूमिश्च **जायते** उत्पद्यते । पिण्डाण्डब्रह्माण्डाद्यखिलजगत्सृष्टिर्भवतीति तात्पर्यम् ।

**यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति ।**

तै. भृ. अ. १

**येनेदं भ्राम्यते विश्वं यदाकाशान्तरं शिवम् ।**
**योगिभिश्चिन्त्यते तत्त्वं महादेवस्सशंकरः ॥**

सामवेदे, कूर्म. पु. भा. २, अ. ३१

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पंच महाभूतानि ।**

ऐतरेयश्रुतिः

एष एव हि देवाश्च भूतानि भुवनानि च ।
अण्डजा जारुजाश्चैव स्वेदजा उद्भिजा अपि ॥

ब्र. गी. अ. ३

"ब्राह्मणोऽस्यमुखमासी" दित्यारभ्य "प्राणाद्वायुरजायत" ।

नाभ्या आसीदन्तरिक्षं शीर्ष्णोद्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥

इति श्रुत्याद्युक्तेः ।

# शरणस्थलम्

मूलम्—

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात् सूक्ष्मतरं नित्यं सत्वमेव त्वमेव तत् ॥ १६ ॥

**यदिति–यत्परं ब्रह्म**-यो महादेवः परतरशिवलिङ्गमित्यर्थः । **सर्वात्मा**-सकलचराचरभूतान्तर्गतत्वात्स्तर्वात्मिस्वरूप इत्यर्थः । **विश्वस्य**-जगतः । **आयतनं**-आलयम् । आश्रयभूतत्वादालयमित्यर्थः । **महत्**-बृहत्, **सूक्ष्मात्**-सूक्ष्मवस्तुनोऽपि, **सूक्ष्मतरं**-अतिसूक्ष्मं, **नित्यं**-त्रिकालाबाधितं, **सत्वं**-सतो भावस्सत्वं सद्रूपं । **तदेव**-तद्ब्रह्मैव लिङ्ग-मेवेत्यर्थः, **त्वमेव**-युष्मच्छब्दगोचरः प्रत्यगात्मैव एवेत्यव्ययमत्र निर्धारणे वर्तते । "**तत्त्वमसि**" इति श्रुतेः अत्र तस्यैवाहं, तवैवाहं, त्वमेवाहमित्याकारकचिन्तनारूपानुसंधानमवगम्यत इति भावः ।

# ऐक्यस्थलम्

मूलम्—

जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥

**जाग्रदिति-यत्**-यद्ब्रह्मणः सकाशाल्लिङ्गादित्यर्थः । **जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं**-जाग्रदाद्यवस्थात्मकसकलव्यापारादिकमपीत्यर्थः । **प्रकाशते**-भासते । "**तस्य भासा सर्वमिदं विभाति**" इति श्रुतेः ।

मुण्डक. मं. २, खं. २

**यद्भासा भासते विश्वं यत्सुखेनानुमोदत**

सि. शि. प. १

इति सिद्धान्तशिखामण्युक्तेश्च ।

**तद्ब्रह्माहमिति**-तद्ब्रह्मैव परतरशिवलिङ्गमेवाहमिति, **ज्ञात्वा** विदित्वा । **मुनिर्ज्ञानी** शिवभक्तो मुमुक्षुः । **सर्वबन्धैः**-अविद्याहृदयग्रन्थ्यादिसमस्तप्रतिबन्धकैरित्यर्थः । **प्रमुच्यते**-प्रकर्षेण मुच्यते । तद्बन्धनाद्विमुक्तो भवतीति यावत् । मुच्लृ मोक्षण इति धातोः ।

**यथा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥**
**भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्व संशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥** इति श्रुतेः ।

मुंण्डक. मं. २ खं. २; बृहदार. अ. ४, ब्रा. ४

मूलम्—

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ॥
॥ १८ ॥

त्रिष्विति–**त्रिषु धामसु**-जाग्रत्-स्वप्नसुषुप्तित्रयेषु स्थानेषु, **यद्-भोग्यं**-भोक्तुं योग्यं यद्वस्त्वित्यर्थः । **भोक्ता**-तदनुभोक्ता जीवः, **भोगश्च**-तदाकारवृत्तिश्च । **यत्**-यः, **भवेत्**-स्यात्, **तेभ्यो**-भोग्यादि त्रयेभ्यः । **विलक्षणः**-विशिष्टसच्चिदानन्दादिलक्षणः । **साक्षी**-तत्साक्षी-**चिन्मात्रः**-चैतन्यमात्रः । **सदाशिवः**-प्रत्यक्षशिव एव । **अहं**-अस्मच्छब्दप्रत्ययविषयः । तथा चोक्तमनुभवसूत्रादौ ।

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यो भवेत् ।
त्रिविधं प्रति यो वेद स भुञ्जानो न लिप्यते ।
अहं कर्ता समस्तस्य धर्माधर्मस्य कर्मणः ।
इत्यनेनाभिमानेन कर्मकाण्डोऽयमुच्यते ॥
नाहं कर्तास्य कर्तृत्वं नैव साक्षी स्वभावतः ।
इत्यनेनाभिमानेन ज्ञानकाण्डोऽयमुच्यते ।
न कर्ताहं न साक्षी च शिव एवेति कर्मणोः ।
द्वयाभिमानराहित्यं भक्तिकाण्डोऽयमुच्यते ॥
शुक्तिः कर्मपदं, सरोरुहदलं ज्ञानं पदं, भक्तिकम् ।
तप्तायोघनमेघसंसृतिपयोबिन्दुः स्थितस्तत्क्रमात् ।

साफल्यं, विफलत्वमाकृतितया प्रायेण नाशं गतो ।
नाम्नाप्येव शिवात्मिकां परतरां भक्तिं किमाचक्ष्महे ॥

कर्ता कारयिता कर्म करणं कार्यमेव च ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥

अनु. अ. ७-८

भोक्ता देवो महेश्वरः । शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगत् ॥ त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः । उभयं ब्रह्म यो वेद स भुञ्जानो न लिप्यते ॥ इति

श्रीकरभा. पृ. ४७; ब्र. गी. अ. ८

मूलम्—

मय्येव सकल जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १९ ॥

इति प्रथमः खण्डः ॥

**मयीति**-मत्त एव यद्ब्रह्मणः परशिवलिङ्गादित्यर्थः मयीति पंचम्यर्थे छान्दसत्वात्सप्तमी । मय्येवेति पदमुत्तरत्रान्वयः । **सकलं**-चराचरात्मकसमस्तं जगत् । **जातम्**-उत्पन्नम् । **सर्वं**-अखिलम् स्थावरजङ्गमात्मकं विश्वमित्यर्थः । **प्रतिष्ठितं**-प्रकर्षेण स्थितम् । **लयं च**-लीनमदर्शनं च । **याति**-प्राप्नोति 'या प्रापण' इति धातोः ।

**यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।**
**लीयते पुनरन्ते च स्थलं तत् प्रोच्यते ततः ॥**

अनु. अ. २

इत्युक्तत्वात् ।

**तत्**-तस्मात् सकलं प्रपञ्चसृष्टिस्थितिसंहारकारणत्वात् । **ब्रह्म**-बृहत् देशकालादिपरिच्छेदशून्यं । **अद्वयं**-अद्वितीयं ज्ञातृज्ञानज्ञेयविभागशून्यशिवतत्त्वापरपर्यायलिङ्गमेवेत्यर्थः । **अहम्**-नान्योऽहमिति ।

**एक एव रुद्रो न द्वितीयाय तस्थे ।**

नारायणोपनिषत् शैव भाष्यं पृ. ५२

**शिवोऽहमिति भावो हि शिवतापत्तिकारणम् ।**
**शिव एव जगत्सर्वं शिव एवाहमित्यपि ।**
**भावयन् परमो योगी भवदोषैर्न बाध्यते ॥**

सि. शि. प. १६-१९

इत्यादिश्रुतिसिद्धान्तशिखामण्युक्तेः ।

**नमश्शिवायेति शिवं प्रपद्ये शिव प्रसीदेति शिवं प्रपद्ये ।**
**शिवात्परं नेति शिवं प्रपद्ये शिवोऽहमस्मीति शिवं प्रपद्ये ॥**

वि. प्र. अ. ४

इति विशेषार्थप्रकाशिकायां मायिदेवप्रभुणापि प्रदर्शितत्वाच्च ।

इति श्री सखरायपत्तन क्षीरस्वामिमठाध्यक्ष्यैः श्रीसदाशिवशिवाचार्यैर्विरचिते शिवाद्वैतप्रकाशक कैवल्योपनिषत्सादाशिवभाष्ये

**प्रथमः खण्डः समाप्तः ॥**

*

# अथ द्वितीयः खण्डः

उपास्योपासकत्वयोरैकत्वं दर्शयति श्रुतिरणोरणीयानित्यादिना ।

मूलम्—

अणोरणीयानहमेव तद्वत्
महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मि ॥ २० ॥

अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहम् ॥ २१ ॥

**अणोरिति**-अहमेव शिवयोगतत्परः शिवोपासकोऽहमेव किञ्चिज्ज्ञत्वादिधर्मवान् जीवसाक्षितया भासमानसर्वज्ञत्वाद्यसाधारण धर्मवान् शिव एव गुरूपदिष्टेष्टलिङ्गरूपपरमात्मैवेत्यर्थः ।

**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरंगानि महेश्वरस्य ॥**

पारमेश्वरतन्त्रं, पटल ६

इति शिवागमोक्तेः ।

**अणोः**-सूक्ष्मात् । **अणीयान्**-सूक्ष्मतरः । अणुप्राणिनोऽप्यणुतर इत्यर्थः । **तद्वत्**-तथैव । **महान्**-महतो महीयानित्यर्थः । महद्वस्तुनोऽप्यतिमहानिति यावत् ।

**अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।**

कठ. अ. १, व. २

**यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥**

ना. उपनिषत्

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥**

कठ. अ. १, व. २

इत्याद्यन्यश्रुतयोऽपि भणन्ति । अहमित्युत्तरत्रान्वयः ।

**विश्वं**-व्यापको जगद्रूपो वा । यद्वेष्टप्राणभावादिनवलिङ्गरूप इत्यर्थः । **विचित्रं**-विचित्रो विलक्षणस्त्रिलोचनत्वादिविरूपात् **यद्वा** विविधनामरूपात्मकश्चन्द्रशेखरत्वादिविचित्रलीलाविग्रहवानित्यर्थः । विश्वं विचित्रमिति वचसी पुल्लिंगत्वेन परिणेये । पुरातनोऽहमित्यादि पुल्लिङ्गत्वेन निर्देशात् । **पुरातनः** आद्यः सनातनः पुराण इति यावत् ।

**अणीयसँ हि परात्परं यन्महतोमहान्तं यदेकमव्यक्तमनन्तरूपम् । विश्वं पुराणं तमसः परस्तात् ॥**

नारायण

**ईशानो भूतभव्यस्य स एवाद्यः स विश्व एतद्वैतत् ।**

कठ. अ. २, व. ४

**रुद्रो वै शाश्वतं पुराणम् ।**

अ. शि. उ.

इत्यादिश्रुतेः ।

**पुरुषः**-पुरि शरीरे पुरीतति नाड्यां वा शयनात्पुरुषः । आत्मेष्टलिङ्गरूपाशिवः, समस्तचेतनाचेतनप्राणिदेहान्तर्वर्ति 'पुरुष-शब्दवाच्यः शिवलिङ्गरूपपरमेश्वर इत्यर्थः ।

**"योऽसावसौ पुरुषः सोऽहमस्मि"**

ईशावास्य

**"अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। इन्द्रियेभ्यः पराह्यर्था"** इत्युपक्रम्य **"अव्यक्तात्पुरुषः परः। पुरुषान्नपरं किंचिन् सा काष्ठा सा परा गति"**रित्यन्तमुक्तं कठोपनिषदि ।

**अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ॥**

कठ. अ. १-२, व. ३-४-६

**अंगुष्ठमात्रः पुरुषोऽगुष्ठं च समाश्रितः ।**

नारायण

**"एष त आत्मा सर्वान्तरः स वा अयं पुरुषः सर्वासु पूर्षु पुरि शय"**

बृहदारण्यक अ. २-३, ब्रा. ५-४)

इत्याद्यन्यश्रुतेः ।

**ईशः**-ईष्ट इतीशो हरिब्रह्माद्यखिलभूतानामपीश्वरः स्वामी महालिङ्गरूपपरशिव इत्यर्थः ।

"ईशानो भूतभव्यस्य"

कठ. अ. २, व. ४

"ईश्वरः सर्वभूतानां"

ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ।

नारायण

पशूनां ब्रह्मविष्ण्वादिदेवानां पतिरीश्वरः ।

पशूनां पतये जगतां पतये ।

रुद्राध्याय अ. २

परब्रह्ममहालिङ्गं प्रपंचातीतमव्ययम् ।

तदेतत्सर्वभूतानामान्तरस्थानगोचरम् ॥

वीरशैवानन्दचन्द्रिका पृ. ३६

इति श्रुत्याद्यनेकोक्तेः ।

**हिरण्मयः**-हिरण्यमिव हिरण्मयो ज्योतिर्लिङ्गमयमहादेव इत्यर्थः ।

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमो नमः ।

नारायणश्रुति

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमः ॥

रुद्राध्याय अ. २

असौ योऽवमर्पति नीलग्रीवो विलोहितः । इत्यादिश्रुतेः ।

सर्वलोकविधातारमीश्वरं हेमरूपिणम् ।

हिरण्मयश्मश्रुकेशं हिरण्मयनखं तथा ॥

**कष्याद्यासनवद्धवक्त्रं नीलग्रीवं त्रिलोचनम् ॥**

श्रीकरभाष्ये पृ. ७४

इत्याद्युक्तेश्च ।

**शिवरूपमिति**-शिवरूप इति पुल्लिंगतया विपरिणेयः पुरुषः ईश इत्यादिपुल्लिंगसाहचर्यात् । **शिवरूपोऽस्मि** साक्षाल्लिङ्गरूप परमेश्वर एवास्मीत्यर्थः ।

**अहं ब्रह्मास्मि संबुध्य इदं सर्वं च मन्मयम् ।**
**मयि विद्या समुद्दिष्टा विमुक्तिर्यन्निबन्धनी ॥** इत्युक्तेः ।

उवटाचार्यकृत ईशावास्य भाष्यम् पृ. २

**पाणिपादः**-पाणी च पादौ च पाणिपादम् । न विद्यते पाणिपादं यस्य स तथा भूतोऽहम् ।

**अपाणिपादो जवनो ग्रहीता । पश्यत्यचक्षुस्सशृणोत्यकर्णः ।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुराद्यं पुरुषं महान्तम् ॥**

श्वेताश्व. अ. ३

**यद्वा**-पाणिपादादिकर्मेन्द्रियवर्जित इति यावत् । **अचिन्त्य शक्तिः**-चिन्तयितुमशंक्या शक्तिर्यस्य स तथा भूतः । ऐच्छिकशक्ति मान्विविधशक्तिमान्वेत्यर्थः ।

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**स पर्यगाच्छुक्रमकायमव्रणम् ।** ईशावास्य

**"अस्थूलमनण्वह्रस्वमदीर्घम्"** बृहदा. अ. ३, ब्रा. ७

अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्य मगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ।

मुंड. मं. १, खं. १

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥

श्वेताश्व. अ. ६

इत्याद्यनेकश्रुतेः ।

अथवानन्तकल्याणगुणैकघन ईश्वरः ।
शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवेदिभिः ॥

वी. अनंद चं. पृ. ३८

इति स्मरणाच्च ।

अचक्षुः-न विद्येते चक्षुषी यस्य स तथा भूतः सन् प्राकृत भौतिकजडाङ्गेन्द्रियादिरहितोऽप्राकृताजडलिङ्गेन्द्रियादिविशिष्टस्सन्नि - त्यर्थः । पश्यामि-शिवलिङ्गमुखत ईक्षे । तद्वदकर्णः सन् सोऽहं शृणोमि-प्रसादलिङ्गमुखेन सर्वं शृणोमीत्यर्थः ।

"विश्वतश्चक्षुरुतविश्वतो मुखः"

श्रुतिसार भा. पृ. १५

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुःश्रोत्रं क उ देवो युनक्ति । श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचोह वाचं च उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।

केन. खं. १

स्थूलाङ्गे स्थूलरूपेण सूक्ष्माङ्गे सूक्ष्मरूपतः ।
कारणे कारणत्वेन तिष्ठन्त्येतानि खानि हि ॥
तेष्वेषु खेषु सर्वेषु लिङ्गं सत्यादिलक्षणम् ।
गुरूपदेशसंसिद्धं भासते सर्वतोमुखम् ॥
एतल्लिङ्गमुखं यत्र दृश्यते सूक्ष्मदर्शिभिः ।
यदामनन्ति वेदाश्च तपांसि नियमास्तथा ॥
हृदयं हृदयस्येति श्रोत्रं श्रोत्रस्य सर्वदा ।
वाचो वाक् त्वक् त्वचः पाणिः पाणेश्चक्षुश्चक्षुषः ॥
पादः पादस्य जिह्वाया जिह्वा गुह्यस्य गुह्यकम् ।
नासिका नासिकायाश्च पायोः पायुरिति स्थितिः ॥
तल्लिङ्गमुखमित्याहुः शिवसिद्धान्ततान्त्रिकाः ।
प्रत्येकलिङ्गमस्यैव मुखं वक्ष्ये पृथक् पृथक् ॥
घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते ।
जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत् ॥
चक्षुषश्च तथा चक्षुः शिवलिङ्गमुखं भवेत् ।
त्वचस्त्वक्चररूपस्य लिङ्गस्य मुखमुच्यते ॥
मुखं प्रसादलिङ्गस्य श्रोत्रं श्रोत्रस्य कथ्यते ।
हृदयं हृदयस्यैव महालिङ्गमुखं भवेत् ॥

अनुभवसूत्रं, अ. ६

नेता त्वमिन्द्रियाणां च सर्वज्ञानप्रबोधकः ।
सांख्ययोगश्च हंसश्च मृत्युंजय नमोऽस्तु ते ॥

मृत्युंजयस्तोत्रे

इत्यादिश्रुत्यानुभवसूत्रादिषु बहुधा प्रपंचितं सविस्तरमत्र संक्षिप्तम् ॥

**यद्वा**-चक्षुः श्रोत्रादि ज्ञानेन्द्रियरहित इति यावत्। **विविक्तरूपश्चाहं** सूक्ष्मरूपो विविधरूपो वा भूत्वा चाहम्। **विजानामि**-सकलं विशेषेण जानामि। इष्टप्राणभावलिङ्गादिविविधरूपस्सन् सर्वं जानामीति भावः। **सदा**-निरन्तरं, भूतभविष्यद्वर्तमानेष्वपि कालेष्वित्यर्थः। **चिदहं**-चैतन्यस्वरूपोऽहं, **यद्वा** चिदुपलक्षित सच्चिदानन्दादिपंचलक्षणलक्षितोऽहमित्यर्थः।

"चेता केवलो निर्गुणश्च"

प्रश्नोपनिषत्

"ज्ञानमयमात्मा" "ज्ञानमानन्दं ब्रह्म"

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥

श्वेताश्व. अ. ६

चिद्रूपं हि परं तत्त्वं शिवाख्यं विश्वकारणम्।
निरस्तविश्वकालुष्यं निष्कलं निर्विकल्पकम्॥
सत्तानन्दपरिस्फूर्तिसमुल्लासकलामयम्।
अप्रमेयमनिर्देश्यं मुमुक्षुभिरुपासितम्॥

सि. शि. प. ६

इति श्रुतिसिद्धान्तशिखामण्युक्तेः।

"चिदानन्दरूपः शिवोऽहं शिवोऽहम्"
"शिवोऽहमस्मीति शिवं प्रपद्ये"

इत्यभिज्ञोक्तेश्च।

**मम**-मां, ममेति कर्मणि षष्ठी । **वेत्ता**-ज्ञाता । **नास्ति**-न विद्यते, कोऽपि न वेत्तीत्यर्थः ।

मूलम्—

वेदैरनेकैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो
न जन्मदेहेन्द्रियबुद्धिरस्ति ॥ २२ ॥

न भूमिरापो न च वह्निरस्ति
न चानिलो मेऽस्ति न चाम्बरं च ॥ २३ ॥

एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥ २४ ॥

**वेदैरिति—अनेकैः**-चतुर्विधैः, **वेदैः**-ऋग्यजुराद्याम्नायैः, **अहमेव**-अस्मच्छब्दाभिधेय आत्मैव, लिङ्गरूपशिव एवेत्यर्थः । **वेद्यः**-वेत्तुं योग्यः । **वेदान्तकृत्**-वेदानामन्ता वेदान्ता उपनिषदः, तान् करोतीति वेदान्तकृत् । उपनिषत्कर्तेत्यर्थः । **वेदवित्**-वेदान्वेत्तीति वेदवित् वेदज्ञोऽहमेवेत्यर्थः ।

"शास्त्रयोनित्वात्"

ब्र. सू. अ. १, पा. १ सू. ३

**अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदस्साम-वेद** इत्यादि "**शिवो मामेव पितरः**" **अष्टादश नामेतासां विद्यानां भिन्नवर्त्मनां। आदिकर्ता शिवस्साक्षाच्छूलपाणिरिति-श्रुतिः ॥**

श्रीकरभा. पृ. ३६

**ईश्वरस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणो-धिपतिः ब्रह्मा शिवो मे अस्तु सदाशिवोम्।**

नारायणोपनिषत्

"**ब्रह्मयोनिः स वा एष पुरुषः**" इति श्रुत्याद्युक्तेः।

"यस्य निश्वसिता वेदा ऋग्वेदयजुर्वेदसामवेद" इति श्रुतौ तथाश्रूयते शास्त्रयोनित्वादिति सूत्रे भगवता व्यासेन वेदप्रतिपाद्यत्वं वेदकारणत्वं च शिवस्य प्रतिपादितमिति। पुरुषसूक्तभाष्ये प्रदर्शित-त्वाच्च। **मम**-मे। **पुण्यपापे**-पुण्यं च पापं च पुण्यपापे धर्माधर्मजन्या-दुरितदुरिते **न स्तः**-न विद्येत इत्यर्थः।

**पुण्यपापे विधूय परात्परं पुरुषमुपैति विद्वान्। अपापविद्धम्।**

ईशावास्य

इत्यादिश्रुतेः।

**नाशः**-हानिः, **नास्ति**-न विद्यते, सच्चिदानन्दादिरूपपरशिव-स्वरूपत्वात्। **जन्मदेहेन्द्रियबुद्धिः**-जन्म च देहश्चेन्द्रियाणि च

बुद्धिश्चैषां समाहारो जन्मदेहेन्द्रियबुद्धिः । लिङ्गव्यत्ययःछान्दसः । जननमरणतनुकरणेन्द्रियादिकमपि । **नास्ति**-न विद्यते ।

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥**

कठ. अ. १, व. २

**सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।**

ईशावास्य

इत्यादिश्रुतेः ।

**मे**-मम, **भूमिः**-पृथ्वी, **आपः**-जलम्, **वह्निश्च**-अग्निरपि, **न**-नास्ति । **अनिलश्च**-वायुरपि, **नास्ति**-न विद्यते । **अम्बरं च**-आकाशोऽपि **नास्ति**-न विद्यते । चकारस्त्वप्यर्थेऽस्ति । आत्मन एवाकाशादिपंचभूतोत्पत्तेस्तत्पंचभूतान्यात्मरूपाणि नेति भावः ।

**आत्मन आकाशः संभूतिराकाशाद्वायुः ।**

तै. अ. १, ब्रह्मानन्दवल्ली

**स यदा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठन्ते ।**
**एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥**

**पृथ्वी च पृथ्वी मात्रा चापश्चापो मात्रा च तेजश्च तेजो मात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च ॥**

प्रश्नोपनिषत् ४

"**आकाशवत्सर्वगतश्च पूर्णः**" इत्यादिश्रुतेः ।

शांकरभा. पृ. २०

